तत्र स्नात्वार्च्य देवेशं भीमं त्रैलोक्यवन्दितम् ॥
गत्वा दारुवने श्रीमान् श्रीलिङ्गं प्रददर्श ह ।
तत्राभ्यर्च्य च ब्रह्माणीं गत्वार्च्य त्रिदशेश्वरीम् ॥
प्लक्षावतरणं गत्वा श्रीनिवासमपूजयत् ।
ततश्च कुण्डिनं गत्वा सम्पूज्य प्राणितृप्तिदम् ॥
सूर्पारके चतुर्बाहुं पूजयित्वा विधानतः ।
मगधारण्यमासाद्य ददर्श वसुधाधिपम् ॥
तमर्चयित्वा विश्वेशं स जगाम प्रजामुखम् ।
महातीर्थं ततः स्नात्वा वासुदेवं प्रणम्य च ॥
शोणं सम्प्राप्य सम्पूज्य रुक्मवर्माणमीश्वरम् ।
महाकोश्यां महादेवं हंसाख्यं भक्तिमानथ ॥
पूजयित्वा जगामाथ सैन्धवारण्यमुत्तमम् ।
तं दृष्ट्वार्च्य हरिं चासौ तीर्थं कनखलं ययौ ।
तत्रार्च्य रुद्रं कालीशं वीरभद्रं च दानवः ॥
गणाधिपं च मेघाङ्कं ययावथ गिरिव्रजम् ।
तत्र देवं पशुपतिं लोकनाथं महेश्वरम् ॥
सम्पूजयित्वा विधिवत् कामरूपं जगाम ह ।
शशिप्रभं देववरं त्रिनेत्रं सम्पूजयित्वा सहितं मृडान्या ।
जगाम तीर्थप्रवरं महाख्यं तस्मिन् महादेवमपूजयच्च ॥
ततस्त्रिकूटं गिरिराजपुत्रं द्रष्टुं जगामाथ स चक्रपाणिम् ।
तमीड्य भक्त्याथ गजेन्द्रमोक्षणं जजाप जप्यं परमं पवित्रम् ॥
तत्रोष्य दैत्येश्वरसूनुरादरान्मासत्रयं मूलफलाम्बुभक्षी ।
निवेद्य विप्रप्रवरेषु काञ्चनं जगाम घोरं स हि दण्डकं वनम् ॥
तत्र दिव्यं महाशङ्खं वनस्पतिवपुर्धरम् ॥
ददर्श पुण्डरीकाक्षं महान्तं चापधारिणम् ।

तस्याधस्तात्त्रिरात्रं तु महाभागवतोऽसुरः ॥
स्थितः स्थण्डिलशायी च पठन् सारस्वतं स्तवम् ।
तस्मात्तीर्थवरं विन्ध्यं सर्वपापप्रणाशनम् ॥
जगाम दानवो द्रष्टुं सर्वपापहरं हरिम् ।

मत्स्यपुराणे,

कृतशौचं महातीर्थं सर्वपापनिसूदनम् ।
यत्रास्ते नरसिंहस्तु स्वयमेव जनार्द्दनः ॥

तथा,

वस्त्रापदं रुद्रकोटिं सिद्धेश्वरमहालयम् ।
गोकर्णं भद्रकर्णं च सुवर्णाख्यं तथैव च ॥
कालञ्जरं वनं चैव शङ्कुकर्णं स्थलेश्वरम् ।
एतानि हि पवित्राणि सान्निध्यात् सन्ध्ययोर्द्वयोः ॥ इति ।

## अथ पृथिवीप्रदक्षिणविधिः ।

पुलस्त्यतीर्थयात्रायां भारते पुलस्त्यं प्रति भीष्मवाक्यम् ।
प्रदक्षिणां यः पृथिवीं करोत्यमितविक्रम ।
किं फलं तस्य विप्रर्षे तन्मे ब्रूहि तपोधन ॥
इति पृष्टेन पुलस्त्येन
पुष्करं परमं गत्वा पितामहनिषेवितम् ।
इति क्रमेण पृथिवीप्रदक्षिणप्रकार उक्तः । अन्ते च
अनेन विधिना यस्तु पृथिवीं पर्यटिष्यति ।
अश्वमेधशतस्याग्र्यं फलं प्रेत्य स भोक्ष्यते ॥
इति दर्शितम् । अतस्तेनैव विधिना प्रदक्षिणा कार्या ।
अन्ये तु नरसिंहपुराणे,
कोकामुखे वराहं च मन्दारे मधुसूदनम् ।

इत्यादिक्रमेण ऽष्टषष्टितीर्थयात्रा उक्ता । तेनैव क्रमेण पृथिवीमदक्षिणा कार्य्या ।

द्रष्टव्यानि यथाशक्त्या क्षेत्राण्येतानि मानवैः ।
वैष्णवैस्तु विशेषेण तेषां मुक्तिं ददाम्यहम् ॥ इति वदन्ति ।

## अथ महापथप्रस्थानविधिः ।

भारते,

विख्यातो हिमवान् पुण्यः शङ्करश्वशुरो गिरिः ।
आकरः सर्वरत्नानां सिद्धचारणसेवितः ॥
शरीरमुत्सृजेत्तत्र विधिपूर्वमनाशके ।
अध्रुवं जीवितं ज्ञात्वा यो वै वेदान्तगो द्विजः
अभ्यर्च्य देवतास्तत्र नमस्कृत्य मुनींस्तथा ।
स्वर्गलोकं स गच्छतीति प्राक्तनेनान्वयः ।

ब्रह्मपुराणे,

महापथस्य यात्रा च कर्तव्या तुहिनोपरि ।
आश्रित्य सत्यं धैर्यं च सद्यः स्वर्गप्रदा हि सा ॥
यावत्पौरन्दरो लोको न यातः कायगौरवात् ।
तावत्तुषारमध्ये तु कस्तनुं त्यक्तुमुत्सहेत् ॥
यतस्तुषारदाह्यांस्तु मुञ्चन्प्राणान् विचेतनः ।
प्रदक्षिणावर्त्तशिखं पश्येद्दीप्तं हुताशनम् ॥
सङ्कर्षणं वपुर्विष्णोश्चण्डाग्निं भवदाहकम् । इति ।
तीर्थानां महिमा महानभिहितो योऽसौ हितो जन्मिनां
तत्तत्कर्मविधिर्महाफलनिधिः सोऽप्यत्र निर्वर्णितः ।
विद्वन्मानसहर्षवर्षणकृता तन्मेऽमुना कर्मणा
पुण्यस्तम्बकरिर्भवार्णवतरिर्देवो हरिः प्रीयताम् ॥

प्रत्याशं परिवर्द्धतेऽर्थिजनतादैन्यान्धकारापहे
श्रीमद्वीरमृगेन्द्रदानजलधिर्यद्वक्त्रचन्द्रोदये ।
राजादेशितमित्रमिश्रविदुषस्तस्योक्तिभिर्निर्मिते
तीर्थे ऽस्मिन् खलु तीर्थजातविषयः पूर्त्तिं प्रकाशोऽगमत् ॥

इतिश्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरी-
नीराजितचरणकमल-
श्रीमन्महाराजप्रतापरुद्रतनूजश्रीमन्महाराजमधुकरसाहसूनु-
चतुरुदधिवलयवसुन्धरावलयपुण्डरीकविकासदिनकर-
श्रीमन्महाराजाधिराजश्रीवीरसिंहदेवोद्योजित-
श्रीहंसपण्डितात्मजपरशुराममिश्रसूनु-
सकलविद्यापारावारपारीणधुरीणजगद्दारिद्र्यमहागजपारीन्द्र-
विद्वज्जनजीवातु-

श्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधनिबन्धे तीर्थप्रकाशः समाप्तः ।

